तमागत्याब्रवीत्—"भो ब्राह्मण! अस्माकं या सम्भावना कृता सा प्राप्तैव। तस्मात् सर्व्वथा कृतकृत्यो गच्छ। परं ममात्र किञ्चित् प्रयोजनमस्ति। तस्मै राज्ञे व्ययार्थमेतद् द्रव्यं चतुष्टयं दास्यामि। एतेषां माहात्म्यं, एकं रत्नं यद् वस्तु स्मर्य्यते तद्ददाति। द्वितीयरत्नेन भोजनादिकममृततुल्यमुत्पाद्यते(१)। तृतीयरत्नात् अश्व रथ पदाति युतं चतुरङ्गबलं (२) भवति। चतुर्थरत्नात् दिव्याभरणानि जायन्ते।" तदेतानि रत्नानि गृहीत्वा ब्राह्मण उज्जयिनीं यावदागतस्तावद् यज्ञसमाप्तिर्जाता। राज्ञा यज्ञान्तस्नानं (३) कृत्वा सर्व्वान् याचकान् पूर्णमनोरथानकरोत्। ब्राह्मणो राजानं दृष्ट्वा रत्नान्यर्पयित्वा प्रत्येकं तेषां गुणमकथयत्। ततो राजावदत्, भो ब्राह्मण! यज्ञदक्षिणाकालः समतीतोऽधुना। मया सर्व्वेऽपि ब्राह्मणसमूहा दक्षिणया तोषिताः, त्वया न किमपि प्राप्तं। तर्हि त्वं एतेषां चतुर्णां मध्ये यत् तुभ्यं रोचते तद् ग्रहीतुमर्हसि (४)। ब्राह्मणेनोक्तं, "गृहं गत्वा गृहिणीं पुत्रं स्नुषाञ्च (५) पृष्ट्वा सर्व्वेभ्यो यद्रोचते, तद् ग्रहीष्यामि"। नृपेणोक्तं "तथा कुरु"। ब्राह्मणोऽपि स्वगृहमागत्य सर्व्व

---

(१) अमृततुल्यम् Like nectar

(२) A full army comprising elephants chariots horse and foot

(३) Ceremonial ablution after a sacrifice

(४) You may take

(५) Son s wife

वृत्तान्त श्रवणयत् (१)। तच्छ्रुत्वा पुत्रो योक्त, "यद्रत्न चतुरङ्ग-बल ददाति तद ग्रहीष्यामि, यत सुखेन राज्य कर्त्तु शक्यते"। पित्रोक्त, "बुद्धिमता राज्य न प्रार्थनीय। यस्मात धन लभ्यते तद रत्न गृहाण, धनेन न कि लभ्यते?"।

भार्य्ययोक्त, "यद्रत्न सुभोजन सूते तद गृह्यताम, सर्व्वेषा प्राणिना अन्नेनैव प्राणधारण भवति"। स्नुषयोक्त "यद्रत्न रत्नाभरणादिक सूते तद् याच्यताम"।

एव चतुर्णा परस्पर विवादो बभूव। ततो ब्राह्मणो राज्ञ समीपमागत्य चतुर्णा विवाद वृत्तान्त न्यवेदयत। राजापि तच्छ्रुत्वा तस्मै चत्वार्य्येव रत्नानि ददौ।

श्रोत्र श्रुतेनैव न कुण्डलेन (२)
दानेन पाणि र्न च कङ्कणेन। (३)
आभाति (४) काय करुणापराणा
परोपकारेण न चन्दनेन ॥

नीति—चम्पकेषु यथा गन्ध कान्ति(५)र्मुक्ताफलेषु च।
यथेक्षुदण्डे माधुर्य्य औदार्य्य महता तथा ॥

---

(१) Described
(२) Earrings
(३) Bracelet
(४) Shines
(५) Lustre, radiance

# त्रयाणां धूर्त्तानाम्

कस्मिंश्चिदधिष्ठाने मित्रशर्म्मा नाम ब्राह्मणः प्रतिवसति स्म। स कदाचित् माघमासे पशुप्रार्थनाय ग्रामान्तरं गतः। तत्र तेन कश्चिद् यजमानो याचितः 'भो यजमान आगामिन्याम् अमावस्यायां यक्ष्यामि (१) यज्ञं, तद् देहि मे पशुम् एकम्"। अथ तेन तस्मै शास्त्रोक्तः पीवरतनुः (२) पशुः प्रदत्तः। सोऽपि तं समर्थम् इतश्चेतश्च गच्छन्तम् अवलोक्य स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः (३) प्रतस्थे।

अथ तस्य गच्छतो मार्गे त्रयो धूर्त्ताः सम्मुखा बभूवुः। तैश्च तादृशं स्थूलतनुं पशुं स्कन्धम् आरूढम् अवलोक्य मिथोऽभिहितम् "अहो अस्य पशोर्भक्षणाद् अद्यतनः हिमपातः व्यर्थतां नेष्यामः। तदेनं वञ्चयित्वा पशुम् आदाय शीतत्राणं (४) कुर्मः"।

अथ तेषाम् एकतमो वेशपरिवर्त्तनं विधाय सम्मुखो भूत्वा तम् उवाच "भो भो किम् एवं जनविरुद्धं हास्यकार्य्यम् अनुष्ठीयते, यद् एष सारमेयः (५) अपवित्रः स्कन्धारूढो नीयते"।

---

(१) यज्ञं यक्ष्यामि यज्ञं करिष्यामि। Shall perform a sacrifice.

(२) Fleshy and well developed

(३) Towards his own city

(४) शीतत्राणं शीतात् परित्राणम्। Relief from cold

(५) सरमा कुक्कुरी तस्या अपत्यं पुमान् सारमेयः कुक्कुरः। Dog

ततश्च तेन कोपाभिभूतेन अभिहितम "अहो किम् अन्धो भवान् यत् पशु सारमेय प्रतिपादयति" (१)। सोऽब्रवीत् "ब्रह्मन कोपस् त्वया न कार्य्य , यथेच्छ गम्यताम"।

अथ यावत् किञ्चिद् अध्वान्तर (२) गच्छति, तावद् द्वितीयो धूर्त्त सम्मुख समुपेत्य तम उवाच "भो ब्रह्मन कष्ट कष्टम। यद्यपि वल्लभोऽय ते सारमेय तथापि स्कन्धम आरोपयितु न युज्यते"। अथासौ सकोपम इदम आह "भो किम अन्धो भवान यत् पशु सारमेय वदति"। सोऽब्रवीत् "भगवन मा कोप कुरु। अज्ञानात् मया अभिहितम। त्वमात्मरुचित (३) समाचर"।

अथ यावत् स्तोक (४) वर्त्मान्तर गच्छति, तावत् तृतीयो ऽन्यवेशधारी (५) धूर्त्त सम्मुख समुपेत्य तमुवाच, "भो अयुक्त मेतत् यत् त्व सारमेय स्कन्धाधिरूढ नयसि। तत् त्यज्यता मेषो यावदन्य कश्चिन्न पश्यति"। अथासौ बहु विमृश्य त पशु सारमेयमेव मन्यमानो, भयाद् भूमौ प्रक्षिप्य, स्वगृहमुद्दिश्य पलायित। ततस्ते त्रयो मिलित्वा त पशुमादाय साह्लाद प्रतस्थिरे।

नीति —वञ्चकेभ्यो मनस्ताप साधूनामपि जायते।

---

(१) प्रतिपादयति प्रतिपन्न करोति। Prove

(२) A further short distance

(३) Do as you please (४) Little, small

(५) In a different guise

## गृध्र-मार्जारयोः ।

अस्ति भागीरथी-तीरे गृध्रकूट नाम्नि पर्व्वते महान पर्कटी वृक्ष । तस्य कोटरे दैव दुर्विपाकात् गलित नख नयन (१) जरद्गवो नाम गृध्र प्रतिवसति । अथ कृपया तज्जीवनाय(२) तद्वृक्षवासिन पक्षिण स्वाहारात् किञ्चित् किञ्चित् उद्धृत्य ददति । तेनासौ जीवति शावक रक्षा च करोति ।

अथ कदाचित् दीर्घकर्ण नामा मार्ज्जार पक्षिशावकान् भक्षयितु तत्र आगत । तमायान्त दृष्ट्वा पक्षि शावकै भयार्त्तै कोलाहल कृत । तत् श्रुत्वा जरद्गवेन उक्तम्— कोऽयमायाति ।

दीर्घकर्णो गृध्रम् अवलोक्य सभयम आह—हा हतोऽस्मि । अधुना अतिसन्निधानेन पलायनमपि न सम्भवति । भवतु विश्वास तावत् उत्पाद्य अस्य समीपम उपगच्छामि । इत्या लोच्य उपसृत्य अब्रवीत्—आर्य्य ! त्वामभिवन्दे ।

गृध्र अब्रवीत्—कस्त्वम् ?

सोऽवदत—मार्ज्जारोऽहम ।

गृध्रो ब्रूते—दूरम अपसर, नो चेत् हन्तव्योऽसि मया ।

मार्ज्जारोऽवदत्—श्रूयता तावत् मम वचनम । ततो यद्यहं वध्य तदा हन्तव्य ।

---

(१) One whose nails and eyes have decayed

(२) For his maintenance , For the support of his life

गृध्रो ब्रूते—ब्रूहि किमर्थम आगतोऽसि।

सोऽवदत्—अहमत्र गङ्गातीरे नित्यस्नायी (१) निरामिषाशी (२) तिष्ठामि। यूय धर्म्म-ज्ञान रता (३) विश्वासभूमय (४) इति पक्षिण सर्व्वे सर्व्वदा ममाग्रे प्रस्तुवन्ति। अत भवद्भ्य धर्म्म श्रोतुम इहागत। भवन्तश्च एतादृशा धर्म्मज्ञा यत् माम् अतिथि हन्तुमुद्यता। गृहस्थ-धर्म्मश्चैष—

अरावप्युचित कार्य्यम आतिथ्य गृहमागते।
छेत्तु पार्श्वं गताच्छाया नोपसंहरति (५) द्रुम॥

यदि अन्न नास्ति तदा सुप्रीतेन (६) वचसापि तावत् अतिथि पूज्य। तथा चोक्तम—

अतिथिर्यस्य भग्नाशो (७) गृहात प्रतिनिवर्त्तते।
स तस्मै दुष्कृत दत्त्वा पुण्यमादाय गच्छति॥

अन्यच्च—

उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागत।
पूजनीयो यथायोग्य सर्व्व-देवमयोऽतिथि॥

(१) Making daily ablutions

(२) A vegetarian

(३) Devoted to piety and learning

(४) A repository of trust and confidence

(५) Withdraws, withholds

(६) With eminently pleasing words

(७) Disappointed

गृध्रोऽवदत—मार्ज्जारो हि मांसरुचय (१)। पक्षिशावकाश्च अत्र निवसन्ति। तेनैव ब्रवीमि।

तत श्रुत्वा मार्ज्जारो भूमि स्पृष्ट्वा कर्णौ स्पृशति। ब्रूते च—मया धर्म्मशास्त्र श्रुत्वा वीतरागेण दुष्करं व्रत चान्द्रायणम् अध्यवसितम्।

एव विश्वास्य स मार्ज्जार तरुकोटरे स्थित। ततो दिनेषु गच्छत्सु स पक्षिशावकान् आक्रम्य कोटरमानीय प्रत्यह खादति। येषाम् अपत्यानि खादितानि तै शोकार्त्तै विलपद्भि (२) इतस्ततो जिज्ञासा समारब्धा। तत् परिज्ञाय मार्ज्जार कोटरात् नि सृत्य वहि पलायित। पश्चात् पक्षिभि इतस्ततो निरूपयद्भि तत्र तरु-कोटरे (३) शावकास्थीनि प्राप्तानि। अनन्तरम् अनेनैव जरद्गवेन अस्माक शावका खादिता इति सर्व्वै पक्षिभि निश्चित्य स गृध्रो व्यापादित।

नीति—अज्ञातकुलशीलस्य (४) वासो देयो न कस्यचित्।

(१) Fond of flesh

(२) Lamenting grief stricken

(३) In the hollow of the tree

(४) A stranger One whose lineage and character are not known

# विद्या

विद्वत्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्व्वत्र पूज्यते ॥१॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनां (१) ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ? २ ।
विद्या ददाति विनयं विनयाद् याति पात्रताम् (२) ।
पात्रत्वाद् धनमाप्नोति धनाद्धर्म्मं ततः सुखम् ॥३॥
ज्ञातिभि र्वण्ट्यते नैव चौरेणापि न नीयते ।
न दानेन क्षयं याति विद्यारत्नं महाधनम् ॥४॥
अनेकसंशयोच्छेदि (३) परोक्षार्थस्य (४) दर्शकं ।
सर्व्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥५॥
सङ्गमयति (५) विद्यैव नीचगापि नरं सरित् (६) ।
समुद्रमिव दुर्द्धर्षं नृपं भाग्यमतः परम् ॥ ६ ।
स जीवति गुणा यस्य धर्म्मो यस्य स जीवति ।
गुणधर्म्मविहीनो यो निष्फलं तस्य जीवनम् ॥ ७ ।

---

(१) Persevering industrious engaged in business

(२) Competence

(३) A thing that clears up many doubts

(४) Of an invisible object

(५) Unites

(६) A river

## त्रयाणां मत्स्यानाम्

कस्मिंश्चिज्जलाशये अनागतविधाता प्रत्युत्पन्नमतिः यद्भविष्यश्चेति (१) त्रयो मत्स्याः प्रतिवसन्ति स्म। अथ कदाचित् तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिः अभिहितम् अहो बहुमत्स्यो(२)ऽयं ह्रदः कदाचिदपि न अस्माभिरन्वेषितः। अद्य तावदाहारवृत्तिः सञ्जाता सन्ध्यासमयश्च संवृत्तः (३)। ततः प्रभातेऽत्रागन्तव्यम् इति निश्चयः।

अथ तेषां तत् कुलिशपातोपमं (४) वचः समाकर्ण्य अनागतविधाता सर्वान् मत्स्यानाहूय इदमूचे हंहो (५) श्रुतं भवद्भिः यत् मत्स्यजीविभिरभिहितम्। तद्रात्रावेव गम्यतां

---

(१) अनागतविधाता (One who provides against what evil is yet to come) अनागतस्य अनुपस्थितस्य सम्भावितस्येति यावत् विधाता प्रतीकारकः यः अनिष्टं सम्भाव्य पूर्वमेव तत्प्रतीकारं चिन्तयति। प्रत्युत्पन्नमतिः (Quick witted having presence of mind) प्रत्युत्पन्ना कार्यकाले उपस्थिता मतिः कर्त्तव्यावधारणशक्तिर्यस्य विपदि अनाकुलेन मनसा प्रतीकारचिन्तने समर्थः। यद्भविष्य (Depending on fate fatalist) यत् भविष्यं तत् भवत्येव न तस्य प्रतिविधानं कर्त्तुं शक्यत इति निश्चित्य उपायचिन्तनविमुखः।

(२) Containing numerous fish

(३) संवृत्तः प्रवृत्तः उपस्थित इति यावत्। Is come, has approached

(४) कुलिशपातोपमं वज्रपातसदृशम्। Like a thunder bolt

(५) हंहो भोः। Oh, Ho

मन्यत् सर । नून प्रभातसमये ते मत्स्यजीविनोऽत्र समागत्य मत्स्यसंचय (१) करिष्यन्ति, एतन्मम मनसि वर्त्तते। तन्न युक्त (२) साम्प्रत क्षणमपि अत्रावस्थातुम"। एतदाकर्ण्य प्रत्युत्पन्नमति प्राह "भो मत्स्यम अभिहित भवता। ममापि अभीष्ट(३)मेतत्। तदन्यत्र गम्यताम"।

अथ तत् समाकर्ण्य उच्चैर्विहस्य यद्भविष्य प्राह "हृष्टो न सम्यक् मन्त्रित (४) भवद्भ्याम। कि तेषां वाङ्मात्रेण (५) पितृ-पैतामहिक(६)मेतत सरस्त्यक्तु युज्यते। यदि आयु क्षयोऽस्ति तदा अन्यत्र गतानामपि मृत्युर्भविष्यति। तदह न यास्यामि। भवद्भ्यान्तु यद्रोचते तत् क्रियताम"।

एव तस्य त निश्चय (७) ज्ञात्वा अनागतविधाता प्रत्युत्पन्न-मतिश्च निष्क्रान्तौ (८) सह परिजनेन। अथ प्रभाते तैर्मत्स्य-जीविभि जालैस्त जलाशयमालोड्य यद्भविष्येण सह तत् सरो निर्मत्स्यता नीतम।

नीति —अनागत य कुरुते स शोभते।

---

(१) Extermination (२) Advisable

(३) Desire, intention

(४) Judged, considered

(५) Simply on their words

(६) Inhabited by forefathers Ancestral

(७) Resolve Determination

(८) Went out

## कृपणकथा

आसीन्मथुरायां गूढधनो नाम वैश्य । स च कला-वाणिज्यादिभि (१) बहुलीकृतवित्त (२) परमकृपणो बभूव। एकदा दुर्भिक्षे प्रत्यासन्ने (३) सञ्जातभयो (४) ऽनुचिन्तितवान्, यदस्मिन् दुर्भिक्षे मम वित्तानि पुत्रकलत्रादिभि खादितव्यानि मया धनशोकेन मर्त्तव्य, तन्न भद्रम। यत

एकाकी पुरुष श्रीमान (५) धन तस्य पर सुहृत्।
अन्ये चासुहृद सर्वं धनमूल कुटुम्बकम (६) ॥

तत् परालक्ष्ये (७) स्थाने वित्तानि रक्षामीति परामृश्य तथा कृतवान्।

---

(१) कला—नृत्यादिका चतुःषष्टिविधा उपविद्या । By commerce arts and industries

(२) One whose wea th has been enormousl, mu'tiplied

(३) Near imminent

(४) सञ्जातभय—सञ्जातं भयं धनक्षयाशङ्का यस्य तथोक्त । Afraid terrified

(५) श्रीमान लक्ष्मीवान (Fortunate) पुरुषा हि निजभाग्यगुणेनैव लक्ष्मीवन्तो भवन्ति, परभाग्येन परानुकूल्येन च कस्यचिदपि धन न जायत इत्यर्थ ।

(६) कुटुम्बक—कुटुम्बस्य भाव । भावे कन् । Relationship

(७) Secret to others

ततो दुर्भिक्षे आपतिते परीवारान् सर्वान् अन्नेन विना म्रियमाणान (१) पश्यन्नपि कस्मैचित् किमपि न ददौ।

अतस्तस्य पुत्रकलत्रादय सर्व्वेऽपि विनाशेनैव मृता। स्वयञ्च प्राणमात्रावशेष परामृष्टवान (२)।

यत्र पुत्रकलत्रेभ्यो दत्त वित्त मयार्ज्जितम।
तन्निजप्राणरक्षार्थं कथ भोक्ष्ये निराकुल (३)॥

तत स्वप्राणरक्षायामपि स वित्त न विनियुङ्क्ते। उपवासेन दिनानि यापयन्त तमतिदुर्ब्बल दृष्ट्वा तन्नगरवासिन कारुणिका पुरुषा केऽपि प्रोचु, हे कृपण! किं करिष्यसि तेन धनेन यस्मिन विद्यमानेऽपि निजप्राणान न रक्षसि?

गूढधन उवाच, अये नगरवासिन पुरुषा! मया प्राणव्ययेऽपि धनव्ययो न स्वीक्रियते। ते ऊचु, तर्हि राज्ञा चौरेण वा गृहीतव्य त्वयि विपन्ने तव धनम। गूढधन उवाच, तदन्यस्यैव बुद्धिहीनस्य धनमन्ये गृह्णन्ति। मया स्वकीय धन गले बद्ध्वा मर्त्तव्यमित्यभिधाय धनपोट्टलक (४) गृहीत्वा स गङ्गातीरे मर्त्तु जगाम। तत्र च नाविक धीवरमुपसर्प्याह, भो भ्रातर्नाविक! प्राणास्त्यक्तुकामेनापि (५) मया

---

(१) Starving to death

(२) Thought wi hin himself

(३) Calm, peaceful

(४) Purse of money bag of coins

(५) Desirous of giving up my life

धनानि त्यक्तु न शक्यन्ते। ततस्त्व परिवारशोकाकुल (१) मां गङ्गाया मज्जयित्वा मारय। तन्निमित्त तुभ्यमेकं सुवर्ण खण्ड (२) दास्यामि। नाविक उवाच, तर्हि मे सुवर्ण खण्ड दर्शय। तत सुवर्णानि सभय दर्शयित्वा पुनरब्रवीत्, भ्रातर्नाविक। सर्व्वाणि सुवर्णानि परस्मै दातुमयोग्यानि, तत एकामेव मुद्रां गृहीत्वा मारय माम। नाविकस्तु तानि सुवर्णानि दृष्ट्वा, तथास्तु इत्यवदत्। ततस्त जले मज्जयित्वा गतप्राण कृत्वा सुवर्णानि गृहीत्वा स नाविक कृतार्थो बभूव।

नीति —दानोपभोगहीनेन धनेन दुर्गति नृणाम।



(१) Bereaved of members of his family

(२) सुवर्णखण्ड—सुवर्णमुद्राम। Gold coin, Sovereign

## अलसकथा ।

उद्योगहेतुरुत्साह प्राणिधर्मो निगद्यते ।
क्रियासु सर्वरूपासु (१) विना तेनालसो भवेत ॥

आसीन्मिथिलाया वीरेश्वरो नाम राजमन्त्री। स च सर्वेभ्यो दुर्गतेभ्योऽनाथेभ्य प्रत्यहमिच्छाभोग (२) प्रयच्छति असौ करुणया अलसानपि दरिद्रवत् प्रतिपालयति। यत —

दुर्गतानाञ्च सर्वेषामलस प्रथमो मत ।
किञ्चिन्न क्षमते (३) कर्त्तुं विदग्धो जठरानलै ॥

ततोऽलसपुरुषाणा तत्रेष्टलाभ श्रुत्वा धूर्त्ता अपि कृत्रिम मालस्य दर्शयित्वा भोज्य गृह्णन्ति। एवञ्च अलसशालाया बहुद्रव्यव्यय दृष्ट्वा राजपुरुषै (४) परामृष्ट, यदज्ञायमान मत्वा करुणया अलसेभ्य स्वामी वस्तूनि प्रयच्छति। छलेन अनलसा अपि तानि गृह्णन्तीत्यस्माक प्रमाद। तदस्मद्दोषेण यदि

---

(१) क्रियासु सर्व्वरूपासु—In all sorts of work

(२) इच्छाभोग—इच्छया इच्छानुसारेण भोग तम। Feast after their own choice

(३) किञ्चिन्न क्षमते—किञ्चिदपि कार्य्य कर्त्तु न शक्नोति। Is not able to do any thing at all

(४) Officers of the King

स्वामिधनं वृथा विनष्टं भवेत् तदा वयं प्रत्यवायिनः । अतोऽलसपुरुषाणां परीक्षां कुर्म्मः ।

इति परामृश्य निद्रितेष्वलसपुरुषेषु ते राजपुरुषा अलसशालायां वह्निं योजयित्वा निरूपयामासुः । ततो गृहलग्नं प्रवृद्धवह्निं दृष्ट्वा धूर्त्ताः सर्व्वे पलायिताः । पश्चादीषदलसा अपि पलायिताः । चत्वारः पुरुषास्तत्रैव सुप्ताः परस्परमालपन्ति । एकेन वस्त्रावृतमुखेनोक्तं (१), अहो कथमयं कोलाहलः ? द्वितीयेनोक्तं, तर्क्यते यदस्मिन् गृहेऽग्निर्लग्नोऽस्ति । तृतीयेनोक्तं, कोऽपि तथा धार्म्मिको नास्ति, य इदानीं जलार्द्रवासोभि(२)रस्मान् प्रावृणोति । चतुर्थेनोक्तं, अये वाचालाः ! वृथा कथं जल्पथ ? तूष्णीं तिष्ठत । ततश्च तूर्णमपि तेषामेवं परस्परालापं श्रुत्वा वह्निञ्च प्रवृद्धमेषामुपरि पतिष्यन्तं दृष्ट्वा राजपुरुषैर्भयेन चत्वारोऽप्यलसाः केशेष्वाकृष्य गृहाद्बहिः कृताः । ततस्तानालोक्य तैः पठितम्—

पतिरेव गतिः स्त्रीणां बालानां जननी गतिः ।
नालसानां गतिः काचित् लोके कारुणिकं विना ॥

---

(१) Covering his face with a cloth

(२) With pieces of cloth wet with water

# बलाद् बुद्धिर्गरीयसी

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म। असौ नित्यमेव अनेकान् मृगशशकादीन् व्यापादयामास (१)।

अथैकदा तद्वनवासिनः सर्व्वे वराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः स्वामिन् किमनेन सकलमृगवधेन (२)। तव एकेनैव मृगेण तृप्तिर्भवति। तत् क्रियतामस्माभिः सह समयः (३)। अद्य प्रभृति प्रतिदिनमेको मृगस्तव भक्षणार्थं समेष्यति। एवं कृते तव तावत् प्राणयात्रा(४) क्लेशं विना भविष्यति, अस्माकमपि सर्व्वोच्छेदनं (५) न स्यात्। तदेष राजधर्म्मो ऽनुष्ठीयताम्।

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह अहो सत्यमभिहितं भवद्भिः। परं यदि नित्यमेव एको मृगो नागमिष्यति तत्तनं सर्व्वानेव भक्षयिष्यामि। अथ ते तथेति प्रतिज्ञाय निश्चिन्तास्तत्र वने निर्भयाः पर्य्यटन्ति। एकश्च प्रतिदिन

---

(१) व्यापादयामास विनाशयामास। Killed

(२) सकलमृगवधेन समस्तपशुसंहारेण। By the destruction of all the beasts

(३) समयः प्रतिज्ञा नियम इति यावत्। Treaty, arrangement

(४) प्राणयात्रा प्राणधारणं जीविकानिर्व्वाह इति यावत्। Maintenance

(५) Total annihilation

क्रमेणायाति। वृद्धो वा वैराग्ययुक्तो (१) वा शोकग्रस्तो वा पुत्र-कलत्र-नाश भीतो (२) वा तेषां मध्यात् तस्य भोजनार्थं मध्याह्न-समये उपतिष्ठति।

अथ कदाचित् शशकस्य वारः (३) समायातः। प्रेषितश्च अनिच्छन्नपि स समस्तमृगैः। स च मन्दं मन्दं गत्वा वेलातिक्रमं विधाय व्याकुल हृदयः सिंहस्य वधोपायं चिन्तयन् दिनशेषे प्राप्तः। सिंहस्तु वेलातिक्रमेण क्षुधार्त्तः कोपाविष्टः सृक्कणी (४) परिलेलिहन् अचिन्तयत् "अहो मया प्रातरेव निःसत्त्वं (५) वनं कर्त्तव्यम्"।

एवं चिन्तयति तस्मिन् शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः। अथ तं चिरादायातं लघुकलेवरञ्चावलोक्य कोपज्वलित(६)स्तं निर्भर्त्स्य यवाह "रे शशकाधम एकतस्तावत् लघुस्त्वम् अपरतश्च वेलातिक्रमेणागतः। अस्मादपराधात् त्वां निपात्य प्रातः सकलान्यपि सत्त्वान्युच्छेत्स्यामि" (७)

---

(१) Indifferent to the worldly pleasures

(२) Afraid of the destruction of wife and children

(३) वारः दिवसः पर्य्याय इति यावत्। Turn

(४) सृक्कणी ओष्ठप्रान्तौ। Corners of the lips

(५) निःसत्त्वं जन्तुशून्यम् एतद्वनस्थितान् सर्व्वानेव जन्तून् हनिष्यामीत्यर्थः। Denuded of all animals

(६) Flaming up in anger

(७) उच्छेत्स्यामि विनाशयिष्यामि। I will exterminate

अथ शशक प्रणम्य सविनय प्रोवाच स्वामिन नात्रापराधो मम न चापरेषा सत्त्वानाम। श्रूयतां कारणम। सिंह आह सत्वर निवेदय यावन्मम दंष्ट्रान्तर्गतो (१) न भवसि।

शशक आह स्वामिन समस्तैर्मृगैरद्य मम वार विज्ञाय अह प्रेषित। मा तु लघुतर दृष्ट्वा तै अपरान पञ्च शशकान मया सह प्रेषितवन्त। ततश्चाहमागच्छन पथि महता केनचिदपरसिंहेन विवरान्निर्गत्य (२) अभिहित रे क्व प्रस्थिता यूयम। मयाभिहित वय वनस्वामिनो भासुरकसिंहस्य आहारार्थं समयधर्म्मेण तत्सकाशे गच्छाम।

ततस्तेनाभिहित "मदीयमेतद्वनम। मया सह समयधर्म्मेण समस्तैर्मृगैर्वर्त्तितव्यम। चौर स भासुरक। अथ (३) सोऽत्र वने राजा तर्हि पञ्च शशकान अत्र धृत्वा तमाहूय द्रुतमागच्छ। य कश्चिदावयो पराक्रमेण राजा भविष्यति स सर्व्वानेव मृगान भक्षयिष्यति। ततोऽह तेनादिष्ट स्वामि सकाशमागत। एतत् वेलातिक्रमकारणम (४)। तदत्र स्वामी प्रमाणम (५)।

---

(१) दंष्ट्रान्तर्गत दन्त मध्य प्रविष्ट। Fallen into my jaws

(२) Coming out of the den

(३) अथ यदि। If

(४) Cause of the lapse of so much time, cause of my coming after the fixed hour

(५) तत् तस्मात् अत्र अस्मिन विषये स्वामी प्रभु प्रमाण साक्ष्येव कर्त्तव्यम यथायथं द्रष्टव्य। Judge

तच्छ्रुत्वा भासुरक आह भद्र यद्येवं सत्वरं दर्शय मे तं चौरसिंहम्। येनाहं मृगकोपं तस्योपरि क्षपयित्वा (१) स्वस्थो भवामि। शशक आह आगच्छतु स्वामी। एवमुक्त्वा असावग्रे प्रस्थितः। ततश्च कञ्चित् कूपमासाद्य स भासुरकमाह स्वामिन् कस्ते प्रतापं सोढुं समर्थः। त्वां दृष्ट्वा दूरत एव स चौरः स्वदुर्गं प्रविष्टः। आगच्छ दर्शयामि।

तच्छ्रुत्वा भासुरक आह भद्र सत्वरं दर्शय मे दुर्गम्। तदनु (२) दर्शितस्तेन कूपः। सोऽपि मूर्खः सिंहः कूपमध्ये आत्मनः प्रतिबिम्बं दृष्ट्वा अपरसिंहधिया (३) नादं मुमोच (४)। ततस्तत्प्रतिशब्देन द्विगुणतरो नादः कूपात् समुत्थितः। अथासौ तं नादमाकर्ण्य कोपज्वलित आत्मानं कूपे क्षिप्त्वा प्राणान् मुमोच। तदाप्रभृति सर्व्वे मृगा निर्भयास्तत्र वने वसन्ति स्म।

---

(१) क्षपयित्वा शमयित्वा। Venting

(२) तदनु तत्पश्चात्। After that

(३) अपरसिंहधिया अन्यसिंहबोधेन अन्य सिंहमवधार्य्येत्यर्थः। Taking him for another lion

(४) Set up a loud roar

## धर्म्मबुद्धि-पापबुद्ध्यो ।

कस्मिंश्चिदधिष्ठाने (१) धर्म्मबुद्धि पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। कदाचित् पापबुद्धिना चिन्तितम् अहं तावत् मूर्खो दरिद्रश्च। तदेनं धर्म्मबुद्धिमादाय देशान्तरं गत्वा अस्याश्रयेण अर्थोपार्ज्जनं (२) कृत्वा एनम् अपि वञ्चयित्वा सुखी भवामि। अथ अन्यस्मिन्नहनि स धर्म्मबुद्धिं प्राह भो मित्र देशान्तरमदृष्ट्वा वार्द्धके (३) शिशुजनस्य का वार्त्ता कथयिष्यसि।

तदाकर्ण्य धर्म्मबुद्धिः प्रहृष्टमना गुरुजनानुज्ञातः (४) शुभेऽहनि तेन सह देशान्तरं प्रस्थितः। तत्र धर्म्मबुद्धिप्रभावेण पापबुद्धिनापि प्रभूतं वित्तमासादितम्। ततश्च द्वावपि तौ प्रभूतं द्रव्यमर्ज्जयित्वा प्रहृष्टौ स्वगृहं प्रति औत्सुक्येन निवृत्तौ।

अथ स्वस्थानसमीपवर्त्तिना (५) पापबुद्धिना धर्म्मबुद्धिः अभिहितः भद्र न सर्व्वम् एतद्वित्तं गृहं नेतुं युज्यते। ज्ञातयो बान्धवाश्च प्रार्थयिष्यन्ते। तदस्मिन् गहने वने क्वापि भूमौ निधाय किञ्चिन्मात्रमादाय गृहं प्रविशाव। भूयः प्रयोजने सञ्जाते समेत्य अस्मात् स्थानान्नेष्याव। तदाकर्ण्य धर्म्मबुद्धिराह भद्र तर्हि एवं क्रियताम्। तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ।

---

(१) अधिष्ठाने नगरे। Town City

(२) Acquisition of wealth

(३) In old age

(४) With the permission of his superiors

(५) When they came near their place

एकदा पापबुद्धिर्निशीथे अटवीं गत्वा तत् सर्व्वं वित्तं समादाय गर्त्तं पूरयित्वा स्वभवनं जगाम। अथ अन्येद्युः पापबुद्धिः धर्म्मबुद्धिं समेत्य प्रोवाच सखे बहुकुटुम्बौ (१) आवां वित्ताभावात् सीदावः (२)। तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयावः। सोऽब्रवीत् भद्र एवं क्रियताम्।

अथ तौ तत्र स्थानं यावत् खनतः तावद्रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे (३) पापबुद्धिः आत्मशिरस्ताडयन् (४) प्रोवाच भो धर्म्मबुद्धे त्वया हृतम् एतद्धनं नान्येन, यतो भूयोऽपि गर्त्तापूरणं कृतम्। तत् प्रयच्छ मे तस्यार्द्धम्, अन्यथा अहं राजकुले निवेदयिष्यामि (५)। स आह भो दुरात्मन् मैवं वद। धर्म्मबुद्धिः खल्वहं न एतच्चौरकर्म्म करोमि। एवं द्वावपि तौ विवदमानौ धर्म्माधिकरणं (६) गत्वा प्रोचतुः परस्परं दूषयन्तौ।

अथ तौ धर्म्माधिकरणाधिष्ठितैः (७) पुरुषैर्दिव्यार्थं यावन्नियोजितौ तावत् पापबुद्धिराह अहो न सम्यक् दृष्टोऽयं

---

(१) बहुकुटुम्बौ बहुपोष्यवर्गौ। Havin, many relatives to support

(२) सीदावः अवसादं प्राप्नवः कष्टं सहावहे इति यावत्। Are suffering much

(३) अत्रान्तरे अस्मिन् समये। In the mean time

(४) Striking his head with his own hands

(५) Shall file a suit in the court of law complain to the officers of the king

(६) धर्म्माधिकरणं व्यवहारदर्शनस्थानं विचारालयमिति यावत्। Court of justice

(७) धर्म्माधिकरणाधिष्ठितैः धर्म्माधिकरणनियुक्तैः। Judges of the court Gentlemen on the bench

न्याय (१)। अत्र विषये वनदेवता मम साक्षीभूता तिष्ठति। सैव आवयोरेकतरं चौरं वा साधुं वा करिष्यति। अथ तैः सर्व्वैरभिहितं भो युक्तमुक्तं भवता। अस्माकमपि अत्र विषये महत् कुतूहलं* वर्त्तते। प्रत्यूषसमये युवाभ्याम् अस्माभिः सह तत्र वनोद्देशे गन्तव्यम्।

एतस्मिन्नन्तरे पापबुद्धिः स्वगृहे गत्वा स्वजनकमुवाच तात प्रभूतोऽयं मया अर्थो धर्म्मबुद्धेश्चोरितः। स च तव वचनेन परिणतिं (२) गच्छति, अन्यथा अस्माकं प्राणैः सह यास्यति। स आह वत्स तद् वद द्रुतं यत् कथयित्वा स्थिरतां नयामि। पापबुद्धिः प्राह तात अस्ति तस्मिन् प्रदेशे महाशमी। तस्यां महत् कोटरमस्ति। तत्र त्वं साम्प्रतमेव प्रविश। ततः प्रभाते यदाहं सत्यश्रावणं (३) करोमि तदा त्वया वाच्यं धर्म्मबुद्धिश्चौर इति।

तथा अनुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिः धौतप्रावरणो (४) धर्म्मबुद्धिपुरःसरो धर्म्माधिकरणिकैः (५) सह तां शमीमभ्येत्य

(१) न्याय विचार। Decision Trial

(२) परिणति परिपाकम्। Appropriation consummation

(३) सत्यं श्रावयामि—सत्यं वदसि चेत् स्वर्गमवाप्स्यसि अनृतं वदसि चेत् नरकमवाप्स्यसि एवं प्रकारेण समवेतान् साक्षिणः साक्ष्यग्रहणात् पूर्व्वं राजपुरुषादयो यत् श्रावयन्ति तत् सत्यश्रावणम्। Shall administer the oath to declare the truth

(४) प्रावरणम् उत्तरीयवस्त्रम्। Putting on clothes duly washed

(५) धर्म्माधिकरणिकैः धर्म्माधिकरणनियुक्तैः। Judges

*रम्यवस्तु समालोके लोलता स्यात् कुतूहलम्।

तारस्वरेण (१) प्रोवाच "भगवति वनदेवते आवयोर्म्मध्ये यश्चौर न कथय" (२)। अथ पापबुद्धिपिता शमीकोटरस्थ प्रोवाच "भो शृणुत शृणुत धर्म्मबुद्धिना अपहृतम् एतद्धनम"। एतदाकर्ण्य सर्व्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना अभवन। धर्म्मबुद्धिना तु तच्छमीकोटर वह्निभोज्यद्रव्यै (३) परिविष्टा वह्निना सन्दीपितम (४)।

अथ ज्वलति तस्मिन अर्द्धदग्धशरीर स्फुटिताक्ष (५) करुण परिदेवयन् (६) पापबुद्धिपिता शमीकोटरान्निश्चक्राम। ततस्ते सर्व्वे पृष्ट भो किमिदम। इत्युक्ते स पापबुद्धि विचेष्टित सर्व्वमिद तेषा निवेद्य उपरत (७) अथ पापबुद्धि शमी शाखाया प्रविलम्ब्य (८) राजपुरुषा धर्म्मबुद्धि प्रशस्य इदमूचु अहो साधु इदमुच्यते।

उपाय चिन्तयेत् प्राज्ञस्तथापायञ्च चिन्तयेत्।

अनेन पापबुद्धिना उपायश्चिन्तितो नापाय। तत तत्फल प्राप्तम।

---

( ) तारस्वरेण उच्च स्वरेण। In a loud voice

(२) न कथय न प्रकाशय। Declare him definitely as such

( ) वह्निभोज्यद्रव्य अग्न्युद्दीपक वस्तुभि। With combustible things

(४) Set fire to

(५) स्फुटिताक्ष स्फुटितनयन। With eyes split out or burst

(६) परिदेवयन विलपन। Crying piteously

(७) उपरत मृत। Dead

(८) प्रविलम्ब्य रज्ज्वा बद्ध्वा लम्बित्वा। Hanging

# सत्यवीरकथा ।

पुरा हस्तिनापुरनाम्नि (१) नगरे महामल्लनामा यवनेश्वरो बभूव। तस्मिन् क्षितिमण्डलं शासति तदुत्कर्षासहिष्णुः काफरराज (२) स्तमभियोद्धुं सकल-बल सहितस्तत्राजगाम। यवनेश्वरस्तमायान्तं ज्ञात्वा काम्बोज (३) तुरङ्गैश्वारोहैः सैनिकैः परिवृतः पुराद्वहिर्भूय तेन सम संग्राममङ्गीचकार। तयोः समारब्धे संग्रामे बलवता काफर राज-सैन्येन हन्यमाना यवन योधाः रणात् पराङ्मुखा बभूवुः। ततः पलायमानं निज-बलं दृष्ट्वा यवनेश्वर उवाच, रे रे मम सैनिकाः युष्माकं मध्ये कोऽपि तादृशो नास्ति यः इदानीं रिपुभयात् पलायमानं मम सैन्यं स्वेन बाहुबलेन त्राणमवलम्बते? तच्च यवन राज वचनं श्रुत्वा

---

(१) हस्तिनापुर—The capital of the Kauravas and Pandavas the remains of which still exist about 57 miles to the north east of the modern city of Delhi on the bank of the old channel of the Ganges It was founded by Hastin, a King of the Lunar line

(२) King of Africa

(३) काम्बोज— This name is applied to the people of the north western corner of India the country was noted for the breeding of horses

कर्णाट कुल सम्भवो (१) नरसिंह देव नामा चौहानकुल (२) सम्भव वीरव्रत नामा च राजकुमारौ प्रोचतु राजन ! क इदानीं रिपुबलसंभग्न भवद्दल निवारयितु शक्नोति, यदि क्षण परावृत्य भवान अवलोकयति, तदा आवाम भवतो विपक्ष पराभवितु चेष्टावहे। यवनेश्वर उवाच, साधु कुमारौ साधु युवाभ्यामन्य क एतादृश व्यवस्यति ? ततो नरसिंहदेव कषाघातेन तुरग ताडयित्वा सहसा काफरबल प्रविवेश व श्य च विजयिनमायान्त काफरराज शल्येन हृदि हतवान। काफरराजस्तु गतप्राणो भूमौ निपपात। वीरव्रत देवेन च भूमौ पतितस्य तस्य शिरश्छित्वा यवनराजस्य पुरो नीतम्। यवनेश्वर उवाच कस्येद शिर ? वीरव्रत

---

(१) कर्णाट—The modern Karnatic the name however was anciently applied to the central districts of the peninsula including Mysore

(२) The Chouhans are on of the Agnikulas who are divided into four tribes the Pramaras the Parihars the Chaluks and the Chouhans The last mentioned tribe was the most valiant of all the name meaning the "four handed warrior The genealogical tree of the Chouhans exhibits ३) princes from Anhub the first celebrated Chouhan, down to Prithviraja the last of the Hindu emperors The Chouhans sent forth twenty four branches of whom the most celebrated are the existing families of Boondi and Kotha

(३) पराक्रमतुलितनरसिंहत्व—पराक्रमेण तुलित अनुकृत नरसिंह नृसिंहावतारो येन तथोक्त।

कथयति, काफ़िरराजस्य। यवनेश्वर उवाच, केनासौ हतः ? वीरव्रतो ब्रूते, राजन्! पराक्रमशालिना नरसिंहदेवेन हतः। तत्पश्चाद्गामिना मया शिरश्छिन्नम्। यवनेश्वर उवाच, नरसिंहदेवः कुत्र ? वीरव्रतो ब्रूते, काफ़िर-राज-सन्निधान एवास्मिन् स्वामिवधामर्षिते मङ्गोलसैनिके (१) बहुभिरेको हन्यमानो मया दृष्टः, क्व गतः कीदानीमस्ति वा तन्न ज्ञायते। ततो यवनराजः परसैन्यं हतनायकं पलायमानं दृष्ट्वा परमानन्दो (२) बभूव। पुरुषांश्च तदनुगामिनः स्वसैनिकान् प्रत्याह, रे रे सैनिकाः। पलायमानान् परभटान् किं निहथ ? सम्प्रति राज्यरक्षितारं काफ़िरराजकृतान्तं नरसिंहदेवं मे विज्ञापयत। तदनन्तरमेकत्र संग्राम-प्रदेशे वहद्रुधिरं (३) पुष्पितं किंशुकमिव वेदना-मूर्च्छितं नरसिंहदेवं यवनराजो ददर्श तुरङ्गादवतीर्य च बभाषे, हे नरसिंहदेव! जीविष्यसि ? नरसिंहदेव उवाच, राजन्! मया यत् कृतं किं तदवगतं भवता ? यवनेश्वर उवाच ज्ञातं मया। कथितं वीरव्रतदेवेन, त्वया मम शत्रुर्हतः। नरसिंहदेव उवाच, तर्हि जीविष्यामि। यतः—

(१) मङ्गोलसैनिक—मङ्गोला महम्मदीय जाति विशेषः तेषां देशः सन्नील पाठानान् मध्यतमः। तेषां सैनिकः स्वपक्षीययोध।

(२) परमो आनन्दो यस्य Highly delighted

(३) वहद्रुधिर Bleeding

स्वीकृतं दुष्करं कर्म्म मया यस्य हितेच्छया।
तेन विस्मायमानो मे फलितः श्रमपादपः॥

ततो यवनराजस्तु कुमारं नाना-भेषज-प्रयोगैः स्वल्पैरेव दिवसैस्तं निरामयमकरोत्। तदनन्तरं काञ्चन-छत्र-चामरादिभिस्तं पूजयितुमुपचक्रमे। ततो नरसिंहदेव उवाच, राजन्! युद्धं राजपुत्राणां स्वाभाविक एव धर्म्मस्तत् किमद्भुतं मया कृतं, यदियं मम पूजा क्रियते? यदि तु पूजैव कर्त्तव्या, तदा वीरव्रत-देवस्य क्रियतां, येन रिपु-शिरोऽभ्यानीय सत्य-रक्षणानुरोधेन भवतः पुरस्तान्मम यशः प्रकाशितं, स्वपौरुषं न ख्यापितम्। अन्यथानेन नीयमानं रिपुशिरो दृष्ट्वा को वा अवगन्तुं शक्नुयात्, यन्मया मारितो रिपुरिति। तदयमेव प्रथमं पूज्यताम्। वीरव्रतदेव उवाच, कुमार नरसिंहदेव मामेवं ब्रूहि, कथमहं तव पराक्रम-फलमादाय परोच्छिष्टजीवी भविष्यामीति। नरसिंहदेव उवाच, साधु सत्यवीर साधु! अनेन तव सत्येन सर्व्वमेव (१) विवेचितम्।

ततस्तयोः परस्परमालापमुपकर्णयता समुपजात-परितोषेण यवनराजेन द्वावपि कुमारौ तुल्यमेव सत्कृतौ।

---

(१) सर्व्वमेव विवेचितं—सर्व्वं ऐहिकं पारत्रिकं समस्तमेव कुशलं विवेचितं विचारितं विचार्य्य सम्पादितमित्यर्थः। इह ते सत्यं शुभं चामुत्र च कल्याणाय कल्पते इत्यर्थः। Has taken note of all considerations relevant to your good

---

## अर्थकाङ्क्षिणा कर्त्तव्यम् ।

षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता (१) ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥

उत्साहसम्पन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदञ्च (२)
लक्ष्मीः स्वयं याति निवासहेतोः ॥

उद्यमेन हि सिध्यन्ति कार्य्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य विशन्ति वदने मृगाः ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥

यः काकिणी(३)मप्यपथप्रपन्नां
निषेवते निष्कसहस्रतुल्याम् (४)
कालेषु कोटिष्वपि मुक्तहस्त-
स्तं राजसिंहं न जहाति लक्ष्मीः ॥

(१) Desiring his own good or prosperity
(२) Staunch in friendship
(३) A cowri used as a coin
(४) Regards like a thousand of gold coins

जलबिन्दु-निपातेन क्रमशः पूर्य्यते घटः।
स हेतुः सर्व्वविद्यानां धर्म्मस्य च धनस्य च॥

इन्द्रियाणि च संयम्य बकवत् पण्डितो नरः।
देश-काल-बलं ज्ञात्वा सर्व्व-कार्य्याणि साधयेत्॥

अव्यापारः परार्थेषु नित्योद्योगः स्वकर्म्मसु।
रक्षणं समुपात्तानां (१) एतद् भवलक्षणं॥

क्षिप्रमायमनालोच्य व्ययमानः स्ववाञ्छया।
परिक्षीयत एवासौ धनी वैश्रवणोपमः (२)॥

अवस्थानुगता चेष्टा समयानुगता क्रिया।
तस्मादवस्थां समयं वीक्ष्य कर्म्म समाचरेत्॥



---

(१) Duly earned

(२) Like Kuvera, the god of wealth

## सिंहशृगालयोः।

कस्मिंश्चित् वनप्रदेशे खरनखरो नाम सिंहः प्रतिवसति स्म। स कदाचित् इतश्चेतश्च परिभ्रमन् क्षुत्क्षामकण्ठो (१) न किञ्चिद् अपि सत्त्वम् आससाद। ततश्च अस्तमनसमये स महतीं गिरिगुहाम् आसाद्य तस्यां प्रविष्टः चिन्तयामास नूनम् एतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम्। तन् निभृतो (२) भूत्वा तिष्ठामि। एतस्मिन्नन्तरे गुहास्वामी दधिपुच्छो नाम शृगालः समायातः। स च अपश्यत् सिंहपदपङ्क्तिर् (३) गुहायां प्रविष्टा न निष्क्रमणं गता (४)। ततश्च सो ऽचिन्तयत् अहो विनष्टो ऽस्मि नूनम् अस्याम् अन्तर्गतेन सिंहेन भाव्यम्। तत् किं करोमि कथं ज्ञास्यामि।

एवं विचिन्त्य दधिपुच्छो द्वारस्थः फुत्कर्तुम् (५) आरेभे। अहो बिल अहो बिल इत्युक्त्वा तूष्णीम्भूय स भूयो ऽभाषत भो किं न स्मरसि यत् मया त्वया सह समयः कृतो ऽस्ति मया बाह्यात् समागतेन त्वं वक्तव्यः त्वया च अहम् आकार-

---

(१) क्षुत्क्षामकण्ठः अस्य क्षुधया क्षामः क्षीणः कण्ठो ऽस्य। Thin or hollow throughhunger

(२) निभृतः अन्यैरलक्षितः। Secret to others unobserved

(३) सिंहस्य पदानि तेषां पङ्क्तिः। A line of the foot prints of a lion

(४) निष्क्रमणं गता बहिर्गता। Came out

(५) फुत्कर्तुम् आह्वातुम्। To call out

णीय (१)। तद् यदि मां नाह्वयसि ततो ऽहं द्वितीयं बिलं यास्यामि।

तच्छ्रुत्वा सिंहश् चिन्तितवान् नूनम् एषा गुहा अस्य समागतस्य सदा समाह्वानं करोति। परम् अद्य मद्भयात् न किञ्चिद् ब्रूते। तद् अहम् अस्याह्वानं करोमि येन तदनुसारेण प्रविष्टो ऽयं मे भोज्यतां याति। एवं सम्प्रधार्य्य (२) सिंहस् तस्य आह्वानम् अकरोत्। अथ सिंहशब्देन सा गुहा प्रतिरवपूर्णा अन्यान् अपि दूरस्थान् आरण्यजीवान् त्रासयामास। शृगालो ऽपि पलायमान इमं श्लोकम् अपठत्

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वने ऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता (३)॥

---

(१) आकारणीय आह्वातव्य। To be called in (or welcomed)

(२) सम्प्रधार्य्य स्थिरीकृत्य। Thus resolved

(३) यः पुरुषः अनागतम् अनुपस्थितं सम्भावितमिति यावत् कुरुते सम्भावितस्य अनिष्टस्य प्रतिकारं विदधाति स शोभते निर्विघ्नं कालम् अतिवाहयति इत्यर्थः। यः अनागतं न करोति सम्भावितस्य अनिष्टस्य प्रतिकारं न विदधाति स शोच्यते अस्मिन् इति शेषः विपदि पतितो बन्धूनां शोकहेतुः भवति इत्यर्थः। अत्र अस्मिन् वने संस्थस्य स्थितस्य मम जरा समागता दीर्घं कालम् अस्मिन् वने वसामि इति भावः। बिलस्य गह्वरस्य वाणी महाह्वानरूपा मे मया कदापि न श्रुता।

## नीलवर्ण-शृगाल-कथा।

कस्मिंश्चिद्वने चण्डरवो नाम शृगालः प्रतिवसति स्म। स कदाचित् क्षुधाविष्टो नगरान्तरे प्रविष्टः। अथ नगरवासिनः सारमेयाः अवलोक्य तं तीक्ष्णदंष्ट्राग्रैः भक्षयितुमारब्धवन्तः। स प्राणभयात् पलायमानः प्रत्यासन्नं रजकगृहं प्रविष्टः। तत्र नीलीरसपूर्णं(१) महाभाण्डं सज्जीकृतमासीत्। स तस्मिन् पपात। अथ तस्मान्निष्क्रान्तो नीलीवर्णः सञ्जातः। ततः सर्वे ते सारमेयाः तं शृगालमजानन्तो यथाभीष्टां दिशं जग्मुः। चण्डरवोऽपि तदनन्तरम्(२) आसाद्य काननाभिमुखं प्रतस्थे।

अथ तदपूर्वं सत्त्वमवलोक्य सर्वे सिंहव्याघ्रवृक-(३)प्रभृतयोऽरण्यनिवासिनो भयव्याकुलमानसाः समन्तात् पलायनक्रियां कुर्वन्ति स्म कथयन्ति स्म च अहो अपूर्वमेतत् सत्त्वं कुतोऽप्यागतम्। न विज्ञायते कीदृगस्य चेष्टितं पौरुषं च। तद्दूरतरं गच्छाम।

चण्डरवस्तु तान् भयव्याकुलितान् विज्ञाय इत्थम् आह

---

(१) नीली एव रसः तेन पूर्णम्। Filled with indigo juice

(२) अन्तरम् अवकाशम्। Interval

(३) वृकः क्षुद्रकायो व्याघ्रजातिविशेषः। Wolf

भो भो श्वापदा (१) कि यूय मा दृष्ट्वा सन्त्रस्ता व्रजथ। न भेतव्य न भेतव्यम। अहमद्य ब्रह्मणा स्वयमेव आहूयाभिहित यत् श्वापदानां मध्ये कश्चित् राजा नास्ति। त्व मयाद्य श्वापदराज्येऽभिषिक्त। अतो गत्वा क्षितितल तान सर्व्वान् परिपालय। ततोऽहम अत्रागत। अह ककुद्रुमो नाम त्रैलोक्ये श्वापदराज सञ्जात।

तच्छ्रुत्वा ते श्वापदा सिंहपुरसरा (२) स्वामिन् प्रभो समादिशेति वदन्तस्त परिवव्रु (३)।

ततस्तेन सिंहाय अमात्यपदवी प्रदत्ता व्याघ्राय शय्यापालत्वम, द्वीपिने ताम्बूलाधिकार, करिणे प्रतीहारित्वम, (४) वानराय छत्रधरत्वम। आत्मीयजात्या तै सह आलापमात्रमपि न करोति। शृगाला सर्व्वे अर्द्धचन्द्र दत्त्वा निःसारिता।

एव स राजक्रियाया वर्त्तते। ते च सिंहादयो मृगान् व्यापाद्य तस्य पुरत प्रक्षिपन्ति। सोऽपि प्रभुधर्म्मेण (५) सर्व्वेषां (६) विभज्य प्रयच्छति।

---

(१) श्वापदा हिंस्रजन्तव। Wild beasts Beasts of prey

(२) सिंहपुर सरा सिंहप्रभृतय। Headed by the lion

(३) परिवव्रु वेष्टितवन्त। Surrounded

(४) प्रतिहारित्व द्वारपालत्वम्। The post of a warder or porter

(५) प्रभुधर्म्मेण राजधर्म्मेण राजधर्म्ममनुसृत्येति यावत्। In accordance with the duties of a king

(६) सर्व्वेषां सर्व्वेभ्य। सम्बन्धविवक्षया षष्ठी। Among all of them

एवं गच्छति काले कदाचित् तेन समागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य (१) कोलाहलो ऽश्रावि । तं शब्दं श्रुत्वा पुलकिततनुः आनन्दपरिपूर्णः उत्थाय स तारस्वरेण (२) विरोतुमारब्धवान् ।

अथ ते तस्य स्वरमाकर्ण्य शृगालो ऽयमिति ज्ञात्वा सलज्जम् अधोमुखाः क्षणमेकं स्थिताः । ततो मिथः (३) प्रोचुः भो वाहिता (४) वयम् अनेन क्षुद्रशृगालेन । तद्बध्यतां बध्यताम् अयम् । सोऽपि तदाकर्ण्य पलायितुमिच्छन् सिंहादिभिः खण्डशः कृतः ।

नीति — यः स्वभावो (५) हि यस्य स्यात् तस्यासौ दुरतिक्रमः (६) ।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् (७) ॥

समाप्तम् ।

---

(१) शृगालवृन्दस्य शृगालसमूहस्य । Of the jackals

(२) तारस्वरेण उच्चस्वरेण । Aloud

(३) मिथः रहसि शृगालस्य परोक्षमित्यर्थः । In secret, aside

(४) वाहिता भृत्यभावेन कर्म कारिता । Made to work as servants, lorded it over

(५) Innate nature, inborn nature

(६) Difficult to give up or overcome

(७) Shoes